यावि' ति ॥ चासानि सम्भावनाय, '**उग्गविस**' ति दुर्जरविष, '**चंडविस**' ति दंष्ट्रकनरकायस्य झगिति व्यापकविष, '**घोरविस**' ति परम्परया पुरुषसहस्रस्यापि हननसमर्थविष, '**महाविस**' ति जम्बूद्वीपप्रमाणस्यापि देहस्य व्यापनसमर्थविषम्, '**अइकायमहाकाय**' ति कायान् शेषाहीनामतिक्रान्तोऽतिकायोऽत एव महाकायस्तत कर्मधारय, अथवा अतिकायानां मध्ये महाकायोऽतिकाय महाकायोऽतस्तं, '**मसिमूसाकालग**' त्ति मषी—कज्जल, मूषा च— सुवर्णादितापनभाजनविशेषस्ते इव कालको य स तथा त, '**नयणविसरोसपुण्ण**' ति नयनविषेण—दृग्विषेण रोषेण च पूर्णो य स तथा तम्, '**अंजणपुंजनिगरप्पगास**' ति अञ्जनपुञ्जाना निकरस्येव प्रकाशो—दीप्तिर्यस्य स तथा त, पूर्वं कालवर्णत्वमुक्तमिह तु दीप्तिरिति न पुनरुक्ततेति, '**रत्तच्छ**' त्ति रक्ताक्ष— '**जमलजुयलचंचलचलंतजीह**' त्ति, जमल—सहवर्ति, युगल—द्वय, चञ्चलं यथा भवत्येव चलन्त्यौ — अतिचपलयोर्जिह्वयोर्यस्य स तथा त, प्राकृतत्वाच्चैवं समास, '**धरणितलवेणिभूय**' ति धरणीतलस्य वेणीभूतो—वनिताशिरस्केशबन्धविशेष इव य कृष्णत्व-दीर्घत्वश्लक्ष्णत्वपश्चाद्भागत्वादिसाधर्म्यात् स तथा तम्, '**उक्कडफुडकुडिलजडुलकक्खडवियडफडाडोयकरणदच्छ**' ति उत्कटो बलवताऽन्येनाध्वंसनीयत्वात्, स्फुटो—व्यक्त प्रयत्नविहितत्वात्, कुटिलो—वक्रस्वरूपत्वात्, जटिल —स्कन्धदेशे केशराणामिवाहीना सम्भावात्, कर्कशो निष्ठुरो बलवत्त्वात्, विकटो—विस्तीर्णो य स्फटाटोप —फणासरम्भस्तत्करणे दक्षो य स तथा त, '**लोहागरधम्ममाणधमधमेंतघोस**' ति लोहस्येवाकरे ध्मायमानस्य—अग्निना ताप्यमानस्य धमधमायमाना—धमधमेतिवर्णव्यक्तिमिवोत्पादयन् घोष —शब्दो यस्य स तथा तम्, '**अणागलियचंडतिव्वरोस**' ति अनर्गलित —अनिवारितोऽनाकलितो वाऽप्रमेयश्चण्ड तीव्रो रोषो यस्य स तथा त, '**समुहियतुरियचवलधमत**' त्ति श्वनो मुख श्वमुख तस्येवाचरण श्वमुखिका—कौलेयकस्येव

भयर्णं ता त्वरित च चपलमतिचञ्चलतया धमन्त– शब्द कुर्वन्तमित्यर्थ, '**सरसरसरसरस्स**' त्ति सर्पगतेरनुकरणम्, '**आइच्च निज्झायइ**' त्ति आदित्य पश्यति दृष्टिलक्षणविषस्य तीक्ष्णतार्थ, '**समडमत्तोवगरणमायाय**' त्ति सह भाण्डमात्रया–पणितपरिच्छेदेन उपकरणमात्रया च ये ते तथा, '**एगाहच्च**' ति एका एव आहत्या–आहनन प्रहारो यत्र भस्मीकरण तदेकाहत्य तद्यथा भवत्येव, कथमिव ? इत्याह–'**कूडाहच्च**' ति कूटस्येव–पाषाणमयमारणमहायन्त्रस्येवाहत्या–आहनन यत्र तत् कूटाहत्य तद्यथा भवतीत्येव, '**परियाए**' त्ति पर्याय –अवस्था, '**कित्तिवण्णसद्दसिलोग**' त्ति, इह वृद्धव्याख्या–सर्वदिग्व्यापी साधुवाद कीर्ति, एकदिग्व्यापी वर्ण, अर्द्धदिग्व्यापी शब्द, तत्स्थान एव श्लोक श्लाघेतियावत्, '**सदेवमणुयासुरे लोए**' त्ति सह देवैर्मनुजैरसुरैश्च यो लोको–जीवलोक स तथा तत्र, '**पुवन्ति**' त्ति 'प्लवन्ते' गच्छन्ति, 'प्लुङ्गतौ' इति वचनात्, '**गुवति**' 'गुप्यन्ति' व्याकुला भवन्ति, 'गुप व्याकुलत्वे' इति वचनात्, '**थुवति**' त्ति क्वचित्तत्र 'स्तूयन्ते अभिष्टूयन्ते–अभिनन्द्यन्ते, क्वचित् परिभमन्तीति दृश्यते, यत्त्चैतदिति, एतदेव दर्शयति–'**इति खलु**' इत्यादि, इतिशब्द प्रस्तुत गुणानुवादनार्थ, '**त**' ति तस्मादिति निगमन, '**तवेण तेएण**' त्ति तपोजन्य तेजस्तप एव वा तेन 'तजसा' तेजोलेश्यया, '**जहा वा वालेण**' त्ति यथैव 'व्याल' भुजगन, '**सारक्खामि**' त्ति सरक्षामि दाहभयात्, '**सगोवयामि**' त्ति सगोपयामि क्षमस्थानमापणन। (सू ५४७–४९)

## सू ५५० — परावृत्तपरिहार ।

'**पभु**' त्ति प्रभविष्णुर्गोशालको भस्मराशिं कर्तुम् ? इत्येक प्रश्न, प्रभुत्व च द्विधा–विषयमात्रापेक्षया तत्करणतश्चेति पुन पृच्छति–'**विसए ण**' मित्यादि, अनेन च प्रथमो विकल्प पृष्ट, '**समत्थे ण**' मित्यादिना तु द्वितीय इति,

**'पारितावणियं'** ति पारितापनिकीं क्रियां पुनः कुर्यादिति । **'अणगाराणं'** ति सामान्यसाधूनां, **'खंतिखमं'** ति क्षान्त्या-क्रोधनिग्रहेण क्षमन्त इति क्षान्तिक्षमा, **'थेराणं'** ति आचार्यादीनां वयःश्रुतपर्यायस्थविराणाम् । **'पडिचोयणाए'** त्ति तन्मतप्रतिकूला चोदना कर्मणोत्साहना प्रतिचोदना तया, **'पडिसाहरणाए'** त्ति तन्मतप्रतिकूलतया विस्मतार्थस्मारणा तया, किमुक्तं भवति ?-**'धम्मिएणं'** मित्यादि, **'पडोयारेणं'** ति प्रत्युपचारेण प्रत्युपकारेण वा, **'पडोयारेउ'** त्ति 'प्रत्युपचारयतु' प्रत्युपचारं करोतु, प्रत्युपकारयतु वा, **'मिच्छं विपडिवन्ने'** त्ति मिथ्यात्वं विप्रतिपन्नः-अनार्यत्वविशेषतः प्रतिपन्न इत्यर्थः । **'सुट्टु णं'** ति उपालम्भवचनम्, **'आउसो'** त्ति हे आयुष्मन् !- चिरप्रशस्तजीविन् ! **'कासव'** त्ति काश्यपगोत्रीय ! **'सत्तमं पउट्टपरिहारं परिहरामि'** त्ति सप्तमं शरीरान्तरप्रवेशं करोमीत्यर्थः, **'जेवि आइ'** त्ति येऽपि च, 'आइ' ति निपातः, **'चउरासीइं महाकप्प सयसहस्साइं'** इत्यादि गोशालकसिद्धान्तार्थः स्थाप्यो, बुद्धेरप्यनाख्यानत्वात्, आह च चूर्णिकार:-'सविसुद्धत्ताओ तस्स सिद्धंतस्स न लक्खिज्जइ' त्ति, तथापि शब्दानुसारेण किञ्चिदुच्यते- चतुरशीतिं महाकल्पशतसहस्राणि क्षपयित्वेति योगः, तत्र कल्पाः-कालविशेषाः, ते च लोकप्रसिद्धा अपि भवन्तीति तद्व्यवच्छेदार्थमुक्तं महाकल्पाः वक्ष्यमाणस्वरूपास्तेषां यानि शतसहस्राणि-लक्षाणि तानि तथा, **'सत्त दिव्वे'** त्ति सप्त 'दिव्यान्' देवभवान्, **'सत्त संजूहे'** त्ति सप्त संयूथान्- निकायविशेषान्, **'सत्त सन्निगब्भे'** त्ति संज्ञिगर्भान्-मनुष्यगर्भवसतीः, एते च तन्मतेन मोक्षगामिनां सान्तरा भवन्ति वक्ष्यति चैवैतान् स्वयमपीति, **'सत्त पउट्टपरिहारे'** त्ति सप्त शरीरान्तरप्रवेशान्, एते च सप्तमसंज्ञिगर्भानन्तरक्रमेणावसेयाः, तथा 'पंचे' त्यादाविदं सम्भाव्यते, **'पंच कम्माणि सयसहस्साइं'** ति कर्मणि-कर्मविषये कर्मणामित्यर्थः, पञ्च शतसहस्राणि लक्षाणि, 'तिन्नि

य कम्मसि' त्ति नाथ कर्मभिज्ञान्, 'खवइत्त' त्ति 'क्षपयित्वा' अतिवाह्य । 'से जहे' त्यादिना महाकल्पप्रमाणमाह, तत्र 'से जहा व' त्ति महाकल्प-प्रमाणवाक्योपन्यासार्थ, 'जहिं वा पज्जुवत्थिय' त्ति यत्र गत्वा परि-सामस्त्येन उपस्थिता-उपरता समाप्ता इत्यर्थ, 'एस णं अद्धा' त्ति एषे गङ्गाया मार्ग, 'एएणं गङ्गापमाणेणं' ति गङ्गायास्तन्मार्गस्य चाभेदाद्गङ्गा प्रमाणेनेत्युक्तम्, 'एवामेव' त्ति उक्तनैव क्रमेण, 'सपुव्वावरेण' त्ति सह पूर्वेण गङ्गादिना यदपर महागङ्गादि तत् सपूर्वापर तेन भावप्रत्ययलोपदर्शनात् सपूर्वापरतयेत्यर्थ । 'तासिं दुविहे' इत्यादि, तासा गङ्गादीना गङ्गादि-गतवालुकाकणादीनामित्यर्थ, द्विविध उद्धार उद्धरणीयद्वैविध्यात्, 'सुहुम-बोंदिकलेवरे चेव' त्ति सूक्ष्मबोन्दीनि-सूक्ष्माकाराणि कलेवराणि-असङ्ख्यात खण्डीकृतवालुकाकणरूपाणि यत्रोद्धारे स तथा, 'बायरबोंदिकलेवरे चेव' त्ति [ ग्रन्थाग्रम् १५० ] बादरबोन्दीनि-बादराकाराणि कलेवराणि—वालुकाकणरूपाणि यत्र तथा, 'ठप्पे' त्ति न व्याख्येय, इतरस्तु व्याख्येय इत्यर्थ, 'अवहाय' त्ति अपहाय-त्यक्त्वा, 'से कोट्ठे' त्ति स कोष्ठा-गङ्गासमुदायात्मक, 'खीणे' त्ति क्षीण, स वालुकापगमभावेऽप्युच्यते, यथा क्षीणधान्य कोष्ठागारमत उच्यते, 'नीरए' त्ति नीरजा स च तद्भूमि-गतरजसामप्यभावे उच्यते इत्याह-'निल्लेवे' त्ति निर्लेप, भूमिभित्त्यादिसंश्लिष्ट सिकतालेपाभावात्, किमुक्त भवति ? 'निट्ठिए' त्ति निष्ठित-निरवयवीकृत इति, 'सेत्त सरे' त्ति अथ तथावत्कालखण्ड सर-सर सञ्ज्ञ भवति मानससञ्ज्ञ सर इत्यर्थ, 'सरप्पमाणे' त्ति सर एवोक्तलक्षण प्रमाण—वक्ष्यमाणमहाकल्पादेर्मान सरप्रमाण, 'महामाणसे' त्ति मानसोत्तर, यदुक्त चतुरशीतिमहाकल्पशतसहस्राणानि तत्प्ररूपितम्, अथ सप्ताना दिव्यादीनां प्ररूपणामाह-'अणंताओ सजूहाओ' त्ति अनन्तजीवसमुदायरूपान्निकायात्, 'चय चइत्त' त्ति च्यव च्युत्वा-च्यवन कृत्वा, चय वा देह, 'चइत्त' त्ति

त्यक्त्वा, **'उवरिल्ले'** त्ति उपरितनमध्यमाधस्तनानां मानसानां सद्भावात् तद् व्यवच्छेदायोपरितन इत्युक्तं, **'माणसे'** त्ति गङ्गादिप्ररूपणत प्रागुक्त स्वरूपे सरसि सर प्रमाणायुष्कयुक्त इत्यर्थः, **'संजूहे'** त्ति निकायविशेषे देव, **'उववज्जइ'** त्ति प्रथमो दिव्यभव सञ्ज्ञिगर्भसङ्ख्यासूनात्क एव, एवं त्रिषु मानसेषु सयूथ्यनाथसयूथसहितेषु चत्वारि सयूथानि त्रयश्च देवभवाः, तथा **'मानसोत्तरे'** त्ति महामानसे पृथक्कमहाकल्पप्रमितायुष्कवति, यत्र प्रागुक्त चतुरशीतिं महाकल्पान् शतसहस्राणि क्षपयिष्यतीति तत्प्रथममहामानसापेक्षयेति ज्ञेयं, अन्यथा त्रिषु महामानसेषु बहुतराणि तानि स्युरिति, एतेषु चोपरिमादिभेदात् त्रिषु मानसोत्तरेषु त्रीण्येव सयूथानि त्रयश्च देवभवाः, आदितस्तु सप्त सयूथानि षट् च देवभवाः, सप्तमदेवभवस्तु ब्रह्मलोके, स च सयूथं न भवति, सूत्रे सयूथत्वेनानभिहितत्वादिति, **'पाईणपडीणायए उदीणदाहिणविच्छिण्णे'** त्ति इहायामविष्कम्भयो स्थापनामात्रत्वमवगन्तव्यं, तस्य प्रतिपूर्णचन्द्रसंस्थानसंस्थितत्वेन तयास्तुल्यत्वादिति, **'जहा ठाणपए'** त्ति ब्रह्मलोकस्वरूपं तथा वाच्यं यथा 'स्थानपद'प्रज्ञापनाद्वितीयप्रकरणे, तच्चैवं 'पडिपुण्णचंदसंठाणसंठिए अच्चिमालीभासरासिप्पभे' इत्यादि। **'असोगवडेंसए'** इत्यत्र यावत्करणात् **'सत्तिवण्णवडेंसए चंपगवडेंसए चूयवडेंसए मज्झे य बंभलोयवडेंसए'** इत्यादि दृश्यं, **'सुकुमालगभद्दलए'** त्ति सुकुमारकश्चासौ भद्रश्च—भद्रमूर्तिरिति समासः, लकारककारौ तु स्वार्थिकाविति, **'मिउकुंडलकुंचियकेसए'** त्ति मृदुनि कुण्डलमिव—दर्भादिकुण्डलकमिव कुञ्चिताश्च केशा यस्य स तथा, **'मट्ठगंडतलकण्णपीढए'** त्ति मृष्टगण्डतले कर्णपीठके—कर्णाभरणविशेषो यस्य स तथा, **'देवकुमारसप्पभए'** त्ति देवकुमारवत्सप्रभ देवकुमारसमानप्रभो वा य स तथा, कशब्द स्वार्थिक इति, **'कोमारियाए पव्वज्जाए'** त्ति कुमारस्येय कौमारी सैव कौमारिकी तस्यां प्रव्रज्यायां विषयभूतायां, सद्ध्यान-बुद्धिमतिलेभ इति योगः, **'अविद्धकण्णए चेव'** त्ति कुश्रुतिशलाकयाऽविद्धकर्ण

–अव्युत्पन्नमतिरित्यर्थः । 'एणेज्जग्मसे' त्यादि, इहैणकादय एवं नामतोऽभिहिता द्वौ पुनरन्त्यौ पितृनामसङ्गिताविति । 'अल थिर' ति अत्यर्थं स्थिरं विवक्षितकालं यावदनश्वरत्वात्, 'धुव' ति ध्रुवं तद्गुणानां ध्रुवत्वात्, अत एव 'धारणिज्ज' ति धारयितुं योग्यम्, एतदेव भावयितुमाह–'सीए' इत्यादि, एवंभूतं च तत् कुत ? इत्याह–'थिरसंघयण' ति अविघटमानसंहननमित्यर्थः, 'इतिकट्टु' त्ति 'इतिकृत्वा' इतिहेतोस्तमनुपालयामीति । (सू ५५०)

सू ५५१—५६ स्तेनदृष्टान्तः । आक्रोशः । तेजोलेश्यामोचनम् ।
गोशालकतेजोलेश्याशक्तिः चरमाष्टकमयपुद्गलागमश्च ।
सम्यक्त्वोत्पादः । सद्गुपासककृतं नीहरणम् ।

'गड्डु व' त्ति गर्त्तं श्वभ्रं, 'दरिं' ति शृगालादिकृतभूविवरविशेषं, 'दुग्गं' ति दुःखगम्यं वनगहनादि, 'निन्नं' ति निम्नं शुष्कसरःप्रभृति, 'पव्वयं व' त्ति प्रतीतं, 'विसमं' ति गर्त्तपाषाणाद्याकुलम्, 'एगेण महं' ति एकेन महता 'तणसूएण व' त्ति 'तणसूत्रेण' तृणाग्रेण, 'अणावरिए' त्ति अनावृतो सावरणस्याल्पत्वात्, 'उवलभसि' त्ति उपलम्भयसि दर्शयसीत्यर्थः, 'तं मा एवं गोसाला' त्ति इह कुर्विति शेषः, 'नारिहसि गोसाला' त्ति इह एवं कर्तुमिति शेषः, 'सच्चेव ते सा छाया' त्ति सैव ते छाया अन्यथा दर्शयितुमिष्टा छाया–प्रकृति । 'उच्चावयाहिं' ति असमञ्जसाभिः, 'आउसणाहिं' ति मृतोऽसि त्वमित्यादिभिर्वचनैः, 'आक्रोशयति' शपति, 'उद्धंसणाहिं' ति दुष्कुलीनेत्यादिभिः कुलाद्यभिमानपातनार्थैर्वचनैः, 'उद्धंसेइ' त्ति कुलाद्यभिमानाद् पातयतीव, 'निब्भच्छणाहिं' ति न त्वया मम प्रयोजनमित्यादिभिः परुषवचनैः, 'निब्भच्छेइ' त्ति नितरां दुष्टमभिधत्ते, 'निच्छोडणाहिं' ति त्यजास्मदीयास्तीर्थंकरालङ्कारानित्यादिभिः, 'निच्छोडेइ' त्ति प्राप्तमर्थं

स्याजयनाति, 'नट्ठेसि क्वयाइ' त्ति नष्टः स्वाचारनाशात्, 'असि' भवसि त्वं, 'क्वयाइ' त्ति कदाचिदिति वितर्कार्थः, अहमेवं मन्ये यदुत नष्टस्त्वमसीति, 'विणट्ठेसि' त्ति मताऽसि, 'भट्ठोसि' त्ति भ्रष्टोऽसि— सम्पद् व्यपेतोऽसि त्वं धर्मत्रयस्य यौगपद्येन योगात् नष्टविनष्टभ्रष्टोऽसीति, 'नाहि ते' त्ति नैव त।

'पाईणजाणवए' त्ति प्राचीनजानपद् प्राच्य इत्यर्थ, 'पव्वाविए' त्ति प्रव्राजित — शिष्यत्वेनाभ्युपगत, 'अन्मुवगमा पव्वज्जा' त्ति वचनात्, 'मुण्डाविए' त्ति मुण्डितस्य तस्य शिष्यत्वेनानुमननात्, 'सेहाविए' त्ति व्रतित्वेन सेधित व्रतिसमाचारसेवनाया तस्य भगवतो हेतुभूतत्वात्, 'सिक्खाविए' त्ति शिक्षितस्तेजोलेश्याद्युपदेशदानेन, 'बहुस्सुईकए' त्ति नियतिवादाभिमतिनिपत्ति हेतुभूतत्वात्, 'कोसलजाणवए' त्ति अयोध्यादेशोत्पन्न। 'वाउक्कलियाइ य' त्ति वातोत्कलिका स्थित्वा २ यो वातो वाति सा वातोत्कलिका, 'वायमण्डलियाइ य' त्ति मण्डलिकाभिर्या वाति, 'सएसि वा' इत्यादौ तृतीयार्थे सप्तमी, 'आवरिज्जमाणि' त्ति स्खल्यमाना, 'निवारिज्जमाणि' त्ति निवर्त्यमाना, 'नो कमइ' त्ति न क्रमते— न प्रभवति, 'नो पक्कमइ' त्ति न प्रकर्षेण क्रमते, 'अंचियाचिं' ति अञ्चिते—सकृद्गत अञ्चितेन वा—सकृद्गमनेन दर्शनाञ्चि —पुनर्गमनमञ्चिताञ्चि, अथवा अञ्चया—गमनेन सह आञ्चि — आगमनमञ्चयाञ्चिगमागम इत्यर्थ, ता करोति, 'अणाहट्टे' त्ति 'अन्वाविष्ट' अभिव्याप्त, 'सुहत्थि' त्ति सुहस्तात् सुहस्ती, 'अहप्पहाणे जणे' त्ति यथाप्रधानो जनो यो य प्रधान इत्यर्थ, 'अगणिझामिए' त्ति अग्निना ध्मातो—दग्धो ध्यामितो वा इत्यर्थ, 'अगणिझूसिए' त्ति अग्निना सेवित क्षपितो वा, 'अगणिपरिणामिए' त्ति अग्निना परिणामित —पूर्वस्वभावत्याजनेनात्मभाव नीत, ततश्च हततेजा धूल्यादिना गततेजा, क्वचित् स्वत एव नष्टतेजा, क्वचिद् यत्रीभूततेजा भ्रष्टतेजा, क्वचित् स्वरूपभ्रष्टतेजा—ध्यामतेजा इत्यर्थ, लुप्ततेजा क्वचित् अद्धीभूततेजा, 'लुप्त

च्छेदने छिद्रं द्वैधीभावे ' इतिवचनात्, छिन्नमुक्तं भवति । 'निणट्ठतेए'— विनष्टतेजा नि सत्तारहितभूततेजा, एकार्था चैते शब्दाः, 'छंदेणं' ति स्वाभिप्रायेण यथेष्टमित्यर्थः, 'निप्पट्ठपसिणवागरणे' ति निर्गतानि स्पष्टानि प्रश्नव्याकरणानि यस्य स तथा तम् । 'दीहुण्हाइ पलोएमाणे' त्ति दीर्घा दृष्टीर्दिक्षु प्रक्षिपन्नित्यर्थः, मानधनानां हतमानानां लक्षणमिदं, 'दीहुण्हाइं नीसाससमाणे' त्ति नि:श्वासानिति गम्यते, 'दाढियाए लोमाइं' ति उत्तरौष्ठस्य रोमाणि, 'अवट्टु (अवक्खु)' ति कृष्यत्रित्वा, 'पुयलिं पप्फोडेमाणे' त्ति 'पुततटीं' पुतप्रदेशं प्रस्फोटयन्, 'विणिद्धुणमाणे' त्ति विनिर्धुन्वन्, 'हा हा अहो हओऽहमस्सीतिकट्टु' त्ति हा हा अहो हतोऽहमस्मीति कृत्वा—इति भणित्वेत्यर्थः, 'अम्बकूणगहत्थगए' त्ति आम्रफलहस्तगतः, स्वकीयतपस्तेजोजनितदाहोपशमनार्थमाम्रास्थिकं चूषतीति भावः, मानाद्यस्तु मद्यपानकृता विकारा समवसेयाः, 'मट्टियापाणए' त्ति मृत्तिकामिश्रितजलेन, मृत्तिकाजलं सामान्यमप्यस्त्यत आह—'आयश्चणिओदएण' ति, टीकाव्याख्या— आतन्यनिश्चोदकं कुम्भकारस्य यद्भाजने स्थितं तेमनाय मृन्मिश्रं जलं तेन। 'अलाहि पज्जत्ते' त्ति 'अलम्' अत्यर्थं 'पर्याप्तं ' शक्तो घातायेति योगः, घातायेति हननाय तदाश्रितत्रसापेक्षया, 'वहाए' त्ति वधाय, एतच्च तदाश्रितस्थावरापेक्षया, 'उच्छायणयाए' त्ति उच्छादनताय सचेतनाचेतनतद्गतवस्तूच्छादनायेति, एतच्च प्रकारान्तरेणापि भवतीत्यग्निपरिणामोपदर्शनायाह —'भासीकरणयाए' त्ति ।

'वज्जस्स' त्ति वर्जस्य—अवद्यस्य, वज्रस्य वा मद्यपानादिपापस्येत्यर्थः, 'चरमे' त्ति न पुनरिदं भविष्यतीतिकृत्वा चरमं, तत्र पानकादीनि चत्वारि स्वगतानि, चरमता चैषां स्वस्य निर्वाणगमनेन पुनरकरणात्, एतानि च किल निर्वाणकाले जिनस्यावश्यम्भावीनीति नास्त्येतेषु दोष इत्यस्य तथा दाहमनाग्निदाहोपशमायापत्तवार्मित्यस्य चार्थस्य प्रकाशनार्थत्वादस्यप्रच्छादनार्थानि भवन्ति,

पुष्कलसंवर्तकादीनि [illegible] ण्यानि बाह्यानि मङ्क्तानुपयोगेऽपि चरमसामान्या- ज्जनचित्तरञ्जनाय चरमाण्युक्तानि, जनेन हि तेषां सातिशयत्वाच्चरमता श्रद्धीयते, ततस्ते सहोक्तानामाम्रकूणकपानकादीनामपि सा सुश्रद्धया भवत्विति बुद्ध्येति, 'पाणयाइ' त्ति जलविशेषा व्रतियोग्या, 'अपाणयाइ' त्ति पानक- सदृशानि शीतलत्वेन दाहोपशमहेतव, 'गोपुट्ठए' त्ति गोपृष्ठात्पतितं, 'हत्थमद्दियं' ति हस्तेन मर्दितं-मर्दितं मलितमित्यर्थ, यथतदेवान्यस्मिन्नक्ष, 'थालपाणए' त्ति स्थाल-जल ('पात्र?) तत्पानकमिव दाहोपशमहेतुत्वात् स्थालपानकम्, उपलक्षणत्वादस्य भाजनान्तरग्रहोऽपि द्रष्टव्य, एवमन्यान्यपि नवर, त्वक्-छल्ली, सीम्बली-कलायादिफलिका, 'सुद्धपाणए' त्ति देवहस्तस्पर्श इति, 'दायालय' त्ति उदकार्द्रं स्थालक, 'दायारग' त्ति उदकवारक, 'दाउम्भग' त्ति [illegible] कुम्भो महान्, 'दाकलस' ति कलशस्तु लघुतर, 'जहा पओगपए' त्ति प्रज्ञापनायां षोडशपदे, तत्र चेदमवमभिधायते-'अम्ब वा फणस वा दालिम वा' इत्यादि, 'तरुणग' त्ति अभिनवम्, 'आमग' त्ति अपक्वम्, 'आसगंसि' त्ति मुखे, 'आवीलेइ' त्ति 'आपीडयेत्' ईषत्प्रपीडयेत्, प्रकर्षत इह यदिति शेष, 'कल' त्ति कलायो-धान्यविशेष, 'सिंबलि' त्ति वृक्षविशेष, 'पुढविसत्थारोवगए' इत्यत्र वर्तते इति शेषो द्रष्टव्य, 'जे ण ते देवे साइज्जइ' त्ति यस्तौ देवौ 'स्वदते' अनुमन्यते, 'ससि' त्ति स्वक स्वकीय इत्यर्थ। 'हल्ल' त्ति गोशालिकातृणसमानाकार कीटकविशेष, 'जाव सव्वन्नू' इति [illegible] यावत्करणादिदं द्रष्टव्य-'जिणे अरहा केवली' ति, 'वागरण' त्ति प्रश्न, 'वागरित्तए' त्ति प्रष्टु, 'विलिए' त्ति 'व्यलीकित' सञ्जातव्यलीक, 'विड्डे' त्ति व्रीडा अस्यास्तीति व्रीड-लज्जाप्रकर्षवानित्यर्थ, भूमार्थेऽस्त्यर्थ प्रत्ययोपादानात्। 'एगतमते' त्ति विजने भूविभागे यावदयपुलो गोशालकान्तिके नागच्छतीत्यर्थ, 'सगार' त्ति 'साङ्केतम्', अयपुलो भवत्समीपे आगमिष्यति ततो भवानाम्रकूणिकं परित्यजतु सवतश्च भवत्ववस्थामिति। 'त नो खलु

एस अवक्कमए' त्ति तदिदं किलाश्चर्यमिति न मन्तव्यं, यद्भवतीनामस्य यद् भवती आश्चर्यभूतया विकल्पितं, किन्तु इदं यद् भवता दृष्टं तदाश्चर्यम्, एतदेवाह 'अन्नचीयए ण एसे' त्ति, इदं च निर्वाणगमनकाले आश्चर्यमेव, तद्रूपानक्रमादस्या इति । तथा हालाहलास्थाने यत्पृष्टमासीत् तन्नीयमाह-'वसीमूलसंठिए' त्ति, इदं च वंशीमूलसंस्थितत्वं तृणगोवालिकायाः लोकप्रतीत मवेति, एतावत्युक्ते मदिरामदविह्वलितमत्वपुचिरमारकस्माद्-'वीण वाएहि रे वीरगा २' एतदेव विशदयति, एतच्चोन्मादवचनं तस्योपासकस्य शापतोऽपि न व्यलीककारणं जातं, यो हि सिद्धिं गच्छति स चरमे गेयादि करोतीत्यादिवचनैर्विमोहितमतित्वादिति । 'हलहलक्खण' ति हसत्स्वरूपं शुद्धमित्यर्थ, हसचिह्नं चेति, 'इड्ढीसक्कारसमुदएण' ऋद्ध्या ये सत्कारा — पूजाविशेषास्तेषां च समुदय स तथा तेन, अथवा ऋद्धिसत्कारसमुदयैरित्यर्थ, समुदयश्च जनाना सङ्घ, 'समणघायए' त्ति श्रमणयोस्तत्कालेऽप्यारोपलक्षण-घातदानात् घातदो घातको वा, अत एव श्रमणमारक इति, 'दाहवक्कतीए' त्ति दाहोत्पत्त्या, 'सुंबेण' ति वल्करज्ज्वा, 'उट्ठुभह' त्ति अवष्ठीवत-निष्ठीवत, क्वचित् 'उच्छुभह' त्ति दृश्यते तत्र थापसम्य किञ्चित्क्षिपतेत्यर्थ, 'आकड्ढविकड्ढिं' ति आकर्षविकर्षिकाम्, 'पूयासक्कारथिरीकरणट्ठयाए' त्ति पूजासत्कारयो पूर्वमानतया स्थिरताहेतो यदि तु ते गोशालकशरीरस्य विशिष्टपूजां न कुर्वन्ति तदा लोको जानाति नायं जिनो बभूव, न चैते जिन शिष्या इत्यवमस्थिरौ पूजासत्कारौ स्यातामिति तयो स्थिरीकरणार्थम्', 'अवगुणंति' त्ति अपावृण्वन्ति । (सू ५५१—५५६)

सू. ५५७—५९ सिंहप्यानीतौषधाहारदाम । सर्वानुभूतिसुनक्षत्रसाधुगति । गोशालकगतिर्विमलवाहनमत्रश्च ।

'साण( ल ) कोट्ठए नाम चेइए होत्था वण्णओ' त्ति तदणको

वाच्य च 'चिरातीए' इत्यादि 'जाव पुढविसिलापट्टओ' त्ति पृथिवीशिलापट्टकवणक यावत्, स च– 'तस्स णं असोगवरपायवस्स हेट्ठा खंधसीसमल्लीणे' इत्यादि, 'मालुयाकच्छए' त्ति मालुका नाम एकास्थिका वृक्षविशेषास्तेषां यत् कक्षं–गहनं तत्तथा। 'विउले' त्ति शरीरव्यापकत्वात्, 'रोगायंके' त्ति रोग–पीडाकारी स चासावातङ्कश्च–व्याधिरिति रोगातङ्क, 'उज्जले' त्ति उज्ज्वल पीडापोहलक्षणविपक्षलेशेनाप्यकलङ्कित, यावत्करणादिदं दृश्य– 'तिउले' त्रीन्—मनोवाक्कायलक्षणानर्थास्तुलयति—जयतीति त्रितुल, 'पगाढे' प्रकर्षवान्, 'कक्कसे' कर्कशद्रव्यमिवानिष्ट इत्यर्थ, 'कडुए' तथैव, 'चंडे' रौद्र, 'तिव्वे' सामान्यस्य झगितिमरणहेतु, 'दुक्खे' त्ति दु खो दु खहेतुत्वात्, 'दुग्गे' त्ति क्वचित् तत्र च दुर्गमिवान भिभवनीयत्वात्, किमुक्त भवति ?— 'दुरहियासे' त्ति दुरधिसह्य —सोढुम शक्य इत्यर्थ, 'दाहवक्कंतीए' दाहो व्युत्क्रान्त — उत्पन्नो यस्य स, स्वार्थिककप्रत्यये दाहव्युत्क्रान्तिक, 'अवियाइ' त्ति अपिचेत्यभ्युच्चय, 'आइ' ति वाक्यालङ्कार, 'लोहियवच्चाइ पि' त्ति लोहितवर्चास्यपि—रुधिरात्मक पुरीषाण्यपि करोति किमन्येन पीडावर्णनेनेति भाव, तानि हि क्लिश्यन्त वेदनोत्पादके रोगे सति भवन्ति, 'चाउव्वण्ण' ति चातुर्वर्ण्य — ब्राह्मणादि लोक, 'झाणंतरियाए' त्ति एकस्य ध्यानस्य समाप्तिरपरस्यानारम्भ इत्येषा ध्यानान्तरिका तस्या, 'मणोमाणसिएणं' ति मनस्येव न बहिर्वचनादिभिरप्रकाशितत्वात् यन्मानसिकं दु ख तन्मनोमानसिक तेन, 'दुवे कवोया' इत्यादि श्रूयमाणमेवार्थं केचिन्मन्यन्ते, अन्ये त्वाहु —कपोतक — पक्षिविशेषस्तद्वद् ये फले वर्णसाधर्म्यात् ते कपोते—कूष्माण्डे, ह्रस्वे कपोते कपोतके ते च ते शरीरे वनस्पतिजीवदेहत्वात् कपोतकशरीरे, अथवा कपोतकशरीरे इव धूसरवर्णसाधर्म्यादेव कपोतकशरीरे कूष्माण्डफले एव ते उपसंस्कृते—संस्कृते, 'तेहिं नो अट्ठो' त्ति बहुपापत्वात्, 'पारियासिए' त्ति परिवासित

ह्यस्तनमित्यर्थ, 'मज्जारकडए' इत्यादेरपि केचित् श्रूयमाणमेवार्थं मन्यन्ते, अन्ये त्वाहु —मार्जारो—वायुविशेषस्तदुपशमनाय कृत—संस्कृत मार्जारकृतम्, अपर त्वाहु —मार्जारो—विरालिकाभिधानो वनस्पतिविशेषस्तेन कृत–भावित यत्तत्तथा, किं तत् ? इत्याह—'कुकुटकमासक' बीजपूरक कटाहम्, 'आहराहि' त्ति निरवद्यत्वादिति। 'पत्तग मोएइ' त्ति पात्रकं—पिठरकविशेष मुञ्चति सिक्कके उपरिकृत सत्तस्मादवतारयतीत्यर्थ, 'जहा विजयस्स' त्ति यथा इहैव— इह शते विजयस्य वसुधाराद्युक्त एव तस्या अपि वाच्यमित्यर्थ, 'बिलमिवे' त्यादि 'बिले इव' रन्ध्रे इव 'पन्नगभूतेन' सर्पकल्पेन, 'आत्मना' करणभूतेन, 'त' सिंहानगारोपनीतमाहार शरीरकोष्ठके प्रक्षिपतीति, 'हट्ठे' त्ति 'हृष्ट' निर्व्याधि, 'अरोगे' त्ति निर्पीड, 'तुट्ठे हट्ठे जाए' त्ति 'तुष्ट' तोषवान्, 'हृष्ट' विस्मित, कस्मादेवम् ? इत्याह—'समणे' इत्यादि, 'हट्ठे' त्ति नीरोगो जात इति। 'भारग्गसो य' त्ति भारपरिमाणत, भारश्च–भारक पुरुषोद्वहनीयो विंशतिपलशतप्रमाणो वेति, 'कुम्भग्गसो य' त्ति कुम्भो–जघन्य आढकानां षष्ट्या, मध्यमस्त्वशीत्या, उत्कृष्ट पुन शतेनेति, 'पउमवासे य रयणवासे य वासे वासिहिइ' त्ति 'वर्ष' वृष्टिर्वर्षिष्यति, किंविध ? इत्याह—'पद्मवर्ष' पद्मवर्षरूप, एव रत्नवर्ष इति, 'सेए' त्ति श्वेत, कथंभूत ? —'संखदलविमलसन्निगासे' त्ति शङ्खस्य यद्दल–खण्ड तल वा तद्रूप विमल तत्सन्निकाश –सदृश च स तथा, प्राकृतत्वाच्चैव समास, 'आउसिहिइ' त्ति आक्रोशान् दास्यति, 'निच्छोडेहिइ' त्ति पुरुषान्तरसम्बन्धि–धनहस्ताद्यवयवात् कारणतो ये श्रमणास्तेभ्यस्तान् वियोजयिष्यन्ति, 'निब्भत्थेहिइ' त्ति आक्रोशव्यतिरिक्तदुर्वचनानि दास्यति, 'पमारेहिइ' त्ति प्रमार–मरणक्रियाप्रारम्भ करिष्यति प्रमारयिष्यति, 'उद्दवेहिइ' त्ति अपद्रावयिष्यति, अथवा 'पमारेहिइ' त्ति मारयिष्यति, 'उद्दवेहिइ' त्ति उपद्रवान् करिष्यति, 'आच्छिन्दिहिइ' त्ति ईषत् छेत्स्यति,

'विच्छिंदेहिइ' त्ति विशरणं विविधतया वा छेत्स्यति, 'भिदिहिइ' त्ति स्फोटयिष्यति पात्राद्येकमेनत्, 'अवहरिहिइ' त्ति अपहरिष्यति—उद्दालयिष्यति, 'निन्नगरे करेहिइ' त्ति 'निर्नगरान्' नगरनिष्क्रान्तान् करिष्यति, 'रज्जस्स व' त्ति राज्यस्य वा, राज्यं च राजादिपदार्थसमुदाय, आह च— "स्वाम्यमात्यश्च राष्ट्रं च, कोशो दुर्गं बलं सुहृत्। सप्ताङ्गमुच्यते राज्यं, बुद्धिसत्त्वसमाश्रयम् ॥१॥" राष्ट्रमपि तदेकदेशः, किन्तु राष्ट्रं—जनपदैकदेश, 'विरमतु णं देवाणुप्पिया! एयस्स अट्ठस्स अकरणयाए' त्ति विरमणं किल वचनाद्यपेक्षयाऽपि स्यादत उच्यते—अकरणतया—करणनिषेधरूपतया। 'विमलस्स' त्ति विमलजिन किलोत्सर्पिण्यामेकविंशतितम 'समवाये' श्रूयते, स चावसर्पिणी चतुर्थजिनस्थाने प्राप्नोति तस्माच्चार्वाचीनजिनान्तरेषु बहव सागरोपमकोट्योऽतिक्रान्ता लभ्यन्ते, अयं च महापद्मो द्वाविंशते सागरोपमाणामन्ते भविष्यतीति दुरवगममिदं, अथवा यो द्वाविंशते सागरोपमाणामन्ते तीर्थङ्कर उत्सर्पिण्यां भविष्यति तस्यापि 'विमल' इति नाम सम्भाव्यते, अनेकाभिधानाभिधेयत्वान्महापुरुषाणामिति, 'पउप्पए' त्ति शिष्यसन्तान, 'जहा धम्मघोसस्स वण्णओ' त्ति यथा धर्मघोषस्य—एकादशशते एकादशोद्देशकाभिहितस्य वर्णकस्तथाऽस्य वाच्य, स च 'जाइसंपन्ने कुलसंपन्ने बलसंपन्ने' इत्यादिरिति, 'रहचरियं' ति रथचर्यां, 'नोल्लावेहिइ' त्ति नोदयिष्यति—प्रेरयिष्यति, सहितामित्यादय एकार्था। (सू ५५७—५५९)

## सू ५६० गोशालकस्य संसारे भ्रमणम्।

'सत्थवज्झे' त्ति शस्त्रवध्य सन्, 'दाहवक्कंतीए' त्ति दाहोत्पत्त्या कालं कृत्वेति योग, दाहव्युत्क्रान्तिको वा मृत्वेति शेष, [illegible] च यथोक्तक्रमेणैतासु त्रिंशत्प्रभृतयो रत्नप्रभादिषु यत उत्पद्यन्त इत्यसौ तथैवोत्पादित, यदाह— "असण्णी खलु पढमं दोच्चं च सिरीसिवा तइय पक्खी। सीहा जंति

चउत्थि उरगा पुण पंचमि पुढविं ॥ १ ॥ छट्ठिं च इत्थियाओ मच्छा मणुया सत्तमिं पुढविं ॥" [ असंज्ञिनः खलु प्रथमां द्वितीयां च सरीसृपाः तृतीयां पक्षिणः । सिंहा यान्ति चतुर्थीं पञ्चमीं पुनः पृथ्वीमुरगाः ॥ १ ॥ षष्ठीं च स्त्रियो मत्स्या मनुष्याश्च सप्तमीं पृथ्वीम् ॥ ] इति, 'खहचरविहाणाई' ति इह विधानानि—भेदाः, 'चम्मपक्खीणं' ति वग्गुलीप्रभृतीनां, 'लोमपक्खीणं' ति हंसप्रभृतीनां, 'समुग्गपक्खीणं' ति समुद्गककाकारपक्षवतां मनुष्यक्षेत्रबहिर्वर्तिनां, 'विययपक्खीणं' ति विस्तारितपक्षवतां समयक्षेत्रबहिर्वर्तिनामेवेति, 'अणेगकुलकोडिसयसहस्ससंजुत्तो' इत्यादि तु यदुक्तं तत्सान्तरमवसेयं, निरन्तरस्य पञ्चेन्द्रियत्वलाभस्योत्कर्षतोऽप्यष्टभवग्रहणस्यैव भावात्, यदाह—'पंचिंदियतिरियनरा सत्तट्ठभवा भवग्गहणे' त्ति, [ पञ्चेन्द्रियतिर्यग्नराः सप्ताष्टभवा भवग्रहणे ] इति 'जहा पन्नवणाए' त्ति प्रज्ञापनाया प्रथमपदे, तत्र चैवमिदं—'एगखुराणं दुखुराणं' मित्यादि, 'एगखुराणं' ति अश्वादीनां, 'दुखुराणं' ति गवादीनां, 'गंडीपयाणं' ति हस्त्यादीनां, 'सणप्फयाणं' ति सनखपदानां सिंहादिनखराणां, 'कच्छभाणं' ति इह यावत्करणादिदं दृश्यं—'गाहाणं मगराणं सुंसुमाराणं' इत्यत्र 'जहा पन्नवणाए' त्ति अनेन यत्सूचितं तदिदं—'मच्छियाणं मसगियाणं' मित्यादि, 'उवचियाणं' इह यावत्करणादिदं दृश्यं—'रोहिणियाणं कुंथूणं पिपीलियाणं' मित्यादि, 'पुलाकिमियाणं' मित्यत्र यावत्करणादिदं दृश्यं—'कुच्छिकिमियाणं गंडूलगाणं गोलोमाणं' मित्यादि, 'रुक्खाणं' ति वृक्षाणामेकास्थिकबहुबीजकभेदेन द्विविधानां, तत्रैकास्थिका निम्बाम्रादयः, बहुबीजाः—अस्थिकतिन्दुकादयः, 'गुच्छाणं' ति वृन्ताकीप्रभृतीनां, यावत्करणादिदं दृश्यं—'गुम्माणं लयाणं वल्लीणं पव्वगाणं तणाणं वलयाणं हरियाणं ओसहीणं जलरुहाणं' ति तत्र 'गुल्मानां' नवमालिकाप्रभृतीनां, 'लतानां' पद्मलतादीनां, 'वल्लीनां' पुष्पफलीप्रभृतीनां, 'पर्वकाणाम्' इक्षु

प्रभृतीनां, 'तृणानां' दर्भकुशादीनां, 'वल्यानां' ताम्रमालादीनां, 'हरितानाम्' अध्यारुहतन्दुलीयकादीनाम्, 'औषधानां' शालिगोधूमप्रभृतीनां, 'जलरुहाणां' कुमुदादीनां, 'कुरुणाण' ति कुहुणानाम्, आयकायप्रभृतिभूमी स्फोटानाम्, 'उस्सन्न च णं' ति बाहुल्येन पुनः, 'पाईणवायाण' ति पूर्ववातानां, यावत्करणादिदं दृश्य—'पडीणवायाण दाहिणवायाण' मित्यादि, 'सुद्धवायाण' ति मन्दस्तिमितवायूनाम्, 'दगाराण' इह यावत्करणादेव दृश्य—'जालाण मुम्मुराण अच्चीण' मित्यादि, तत्र च 'ज्वालानाम्' अनलसम्बद्धस्वरूपाणां, 'मुमुराणां' फुम्फुकादौ मसृणाग्निकणानाम्, 'अर्चिषाम्' अनलाप्रतिबद्धज्वालानामिति। 'ओसाण' ति रात्रिजलानाम्, इह यावत्करणादिद दृश्य—'हिमाणं महियाण' ति, 'रत्ताओहयाण' ति रातार्थ—भूमीया मुद्रा नि तानि स्तानादरानि, 'पुटपींण' ति गनिरत्ना, 'सक्कराण' ति शर्करिकाणां, यावत्करणादिदं दृश्य—'वालुयाण उवलाण' ति, 'सूरकताण' ति मणिविशेषाणां, 'बाहिं रारियत्ताए' त्ति नगरबहिर्विनिवेश्यत्वेन, मान्तज पेश्यत्वेनेत्यर्थः, 'अतोरारियत्ताए' त्ति नगराभ्यन्तरवेश्यात्वेन, विशिष्टवेश्यात्वेनेत्यर्थः। (सू ५९ )

सू ५६१ दारिकामम्यकत्र तरणयुता भवा कुदप्रतिभवश्च।

'पडिरूवण्ण सुकेण' ति 'प्रतिरूपेन' उचितेन शुल्केन—दानेन, 'भण्डकरण्डगसमाणे' त्ति आभरणभाजनतुल्या आदेयेत्यर्थः, 'तेल्लकेला इव सुसंगोविय' त्ति तैलकेला इव—तैलाश्रया भाजनविशेष सौराष्ट्रप्रसिद्ध, सा च सुष्ठु सगोपनीया भवत्यन्यथा लुठति ततश्च तैलहानि स्यादिति, 'चेल पेडा इव सुसपरिगहिय' त्ति चेलपेडावत्—वस्त्रमञ्जूषेव सुष्ठु सपरिवृत्ता (गृहीता)—निरुपद्रवे स्थाने निवेशिता। 'दाहिणिल्लेसु असुरकुमारेसु देवेसु देवत्ताए उववज्जिहिइ' त्ति विराधितश्रामण्यत्वाद्यथाऽनगाराणां

# ॥ प्रथमं परिशिष्टम् ॥

[ श्रीमत्सूत्रकृताङ्गे द्वितीय श्रुतस्कन्ध षष्ठ अध्ययनम् ]

गोसाले—

पुराकड अद्द इम सुणेह मेगन्तयारी समणे पुरासी ।
से भिक्खुणो उवणेत्ता अणेगे आइक्खइण्हिं पुढो वित्थरेण ॥ १ ॥

साजीविया पट्ठवियाथिरेण सभागओ गणओ भिक्खुमज्झे ।
आइक्खमाणो बहुजन्नमत्थ न संधयाई अवरेण पुव्व ॥ २ ॥

एगन्तमेव अदुवा वि इण्हि दोवन्नमन्न न समेइ जम्हा ।

अद्दे—

पुव्विं च इण्हिं च अणागय वा एगन्तमेव पडिसंधयाइ ॥ ३ ॥

समिच्च लोग तसथावराण खेमंकरे समणे माहणे वा ।
आइक्खमाणो वि सहस्समज्झे एगतय सारयई तहच्चे ॥ ४ ॥

धम्म कहतस्स उ नत्थि दोसो
खतस्स दतस्स जिइदियस्स ।
भासाय दोसे य विवज्जगस्स
गुणे य भासाय निसेवगस्स ॥ ५ ॥

महव्वए पंच अणुव्वए य तहेव पंचासव संवरे य ।
विरइ इह स्सामणियम्मि पुण्णे लवावसक्की समणे त्ति बेमि ॥ ६ ॥

गोसाले—

सीओदग सेवउ बीयकाय आहायकम्मं तह इत्थियाओ ।
एगन्तचारिस्सिह अम्ह धम्मे तवस्सिणो नाभिसमेइ पाव ॥ ७ ॥

अद्दे—

सीओदग वा तह बीयकाय आहायकम्म तह इत्थियाओ।
एयाइ जाणं पडिसेवमाणा अगारिणो अस्समणा भवन्ति ॥ ८ ॥

सिया य बीओदग इत्थियाओ पडिसेवमाणा समणा भवन्तु।
अगारिणो वी समणा भवन्तु सेवन्ति उ ते वि तहप्पगारं ॥ ९ ॥

जे यावि बीओदगभोइ भिक्खू भिक्खं विहं जायइ जीवियट्ठी।
ते नाइसंजोगमविप्पहाय कायोवगा णन्तकरा भवन्ति ॥ १० ॥

गोसाले—

इमं वयं तु तुम पाउकुव्वं पावाइणो गरिहसि सव्व एव।

अद्दे—

पावाइणो पुढो पुढो किट्टयन्ता सयं सयं दिट्ठि करेन्ति पाउ ॥ ११ ॥

ते अन्नमन्नस्स उ गरहमाणा अक्खन्ति भो समणा माहणा य।
सओ य अत्थी असओ य नत्थि गरहामु दिट्ठिं न गरहामु किंचि ॥ १२ ॥

न किंचि रूवेणऽभिधारयामो सदिट्ठिमग्गं तु करेमु पाउं।
मग्गे इमे किट्टिए आरिएहिं अणुत्तरे सप्पुरिसेहिं अंजू ॥ १३ ॥

उड्ढं अहेयं तिरियं दिसासु तसा य जे थावर जे य पाणा।
भूयाहिसंकाभि दुगुंछमाणा नो गरहई वुसिमं किंचि लोए ॥ १४ ॥

गोसाले—

आगन्तगारे आरामगारे समणे उ भीए न उवेइ वासं।
दक्खा हु सन्ती बहवे मणुस्सा ऊणाइरित्ता य लवालवा य ॥ १५ ॥

मेहाविणो सिक्खिय बुद्धिमन्ता सुत्तेहि अत्थेहि य निच्छयन्ना।
पुच्छिंसु मा णे अणगार अन्ने इइ संकमाणो न उवेइ तत्थ ॥ १६ ॥

अद्दे—

नाकामकिच्चा न य बालकिच्चा रायाभिओगेण कुओ भएण।
वियागरेज्ज पसिणं न या वि सकामकिच्चेणिह आरियाण ॥ १७ ॥

गंता च तत्था अदुवा अगंता वियागरेज्जा समियासुपन्ने।
अणारिया दंसणओ परित्ता इति संकमाणो न उवेइ तत्थ ॥ १८ ॥

गोसाले—

पण्णं जहा वणिए उदयट्ठी आयस्स हेउं पगरेइ संग।
तऊवमे समणे नायपुत्ते इच्चेव मे होइ मई वियक्का ॥ १९ ॥

अद्दे—

नवं न कुज्जा विहुणे पुराणं चिच्चामइ ताइ य साह एवं।
एयावया बंभवइ त्ति वुत्ता तस्सोदयट्ठी समणे त्ति बेमि ॥ २० ॥

समारभंते वणिया भूयगाम परिग्गहं चेव ममायमाणा।
ते णाइसंजोगमविप्पहाय आयस्स हेउं पगरेंति संगं ॥ २१ ॥

वित्तेसिणो मेहुणसंपगाढा ते भोयणट्ठा वणिया वयंति।
वयं तु कामेसु अज्झोववन्ना अणारिया पेमरसेसु गिद्धा ॥ २२ ॥

आरंभगं चेव परिग्गहं च अविउस्सिया णिस्सिय आयदंडा।
तेसिं च से उदए जं वयासी चउरंतणंताय दुहाय णेह ॥ २३ ॥

णेगंति णच्चंति य ओदए सो वयंति ते दो विगुणोदयम्मि।
से उदए साइमणंतपत्ते तमुदयं साहयइ ताइ णाइ ॥ २४ ॥

अहिंसयं सव्वपयाणुकंपी धम्मे ठियं कम्मविवेगहेउं।
तमायदंडेहिं समायरंता अबोहिए ते पडिरूवमेयं ॥ २५ ॥

# ॥ द्वितीय परिशिष्टम् ॥

[ दीघनिकायस्थसामञ्ञफलसुत्तात् ]

१९ एकमिदाहं भन्ते समयं येन मक्खलिगोसालो तेनुपसङ्कमिं । उपसङ्कमित्वा मक्खलिगोसालेन सद्धिं सम्मोदिं सम्मोदनीयं कथं सारणीयं वीतिसारेत्वा एकमन्तं निसीदिं । एकमन्तं निसिन्नो खो अहं भन्ते मक्खलिगोसालं एतदवोच । "यथा नु खो इमानि, भो गोसाल, पुथुसिप्पायतनानि सेय्यथीदं हत्थारोहा पे सक्का नु खो भो गोसाल एवमेव दिट्ठेव धम्मे सन्दिट्ठिकं सामञ्ञफलं पञ्ञापेतुं ।" ति ॥

२० एवं वुत्ते भन्ते मक्खलिगोसालो मं एतदवोच । 'नत्थि महाराज हेतु, नत्थि पच्चयो सत्तानं संकिलेसाय अहेतुअपच्चया सत्ता संकिलिस्सन्ति । नत्थि हेतु, नत्थि पच्चयो सत्तानं विसुद्धिया, अहेतुअपच्चया सत्ता विसुज्झन्ति । नत्थि अत्तकारे, नत्थि परकारे,

---

[ सुमङ्गलविलासिनीनाम्न्या दीघनिकायटीकाया ]

१९ एत्थ पन मक्खलीति तस्स नामं, गोसालाय जातत्ता गोसालो ति दुतियं नामं । तं किर सकद्दमाय भूमिया तेलघटं गहेत्वा गच्छन्तं 'तात, मा खलि' इति सामिको आह । सो पमादेन खलित्वा पतित्वा सामिकस्स भयेन पलायितुं आरद्धो । सामिको उपधावित्वा दुस्सकण्णे अग्गहेसि । सो साटकं छड्डेत्वा अचेलको हुत्वा पलायि ॥

२० 'मक्खलिवादे पच्चयो हेतुवचनमेव । उभयेनापि विज्जमानमेव कायदुच्चरितादिं संकिलेसपच्चयं, कायसुचरितादिं च विसुद्धिपच्चयं पटिक्खिपति । अत्तकारे ति अत्तकारो । येन अत्तना कतकम्मेन इमे सत्ता देवत्तं पि मारत्तं पि ब्रह्मत्तं पि सावकबोधिं पि पच्चेकबोधिं पि सब्बञ्ञुतं पि पापुणन्ति,

नत्थि पुरिसकारे, नत्थि बलं, नत्थि विरियं नत्थि पुरिसथामो, नत्थि पुरिसपरक्कमो। सब्बे सत्ता सब्बे पाणा सब्बे भूता सब्बे जीवा अवसा अबला अविरिया नियतिसङ्गतिभावपरिणता छस्सेवाभिजातिसु सुखदुक्खं पटिसंवेदेन्ति। चुद्दस खो पनिमानि योनिपमुखसतसहस्सानि सट्ठिं च सतानि छ च सतानि, पञ्च च कम्मुनो सतानि पञ्च

---

तं पि पटिक्खिपति। दुतियपदेन यं परकारं परस्स ओवादानुसासनिं निस्साय ठपेत्वा महासत्तं अवसेसो जनो मनुस्ससोभग्गतं आदिं कत्वा याव अरहत्तं पापुणाति, तं परकारं पटिक्खिपति। एवमयं बालो जिनचक्के पहारं देति नाम। **नत्थि पुरिसकारे** ति येन पुरिसकारेन सत्ता वुत्तप्पकारसम्पत्तियो पापुणन्ति तं बलं पटिक्खिपति। **नत्थि विरियं** ति आदीनि सब्बानि पुरिसकारवेवचनानेव 'इदं नो विरियेन इदं पुरिसथामेन इदं पुरिसपरक्कमेन पवत्तं' ति, एवं पवत्तवचनपटिक्खेपकरणवसेन पनेतानि विसुं आदियन्ति। **सब्बे सत्ता** ति ओट्ठगोणगद्रभादयो अनवसेसे परिग्गण्हाति। **सब्बे पाणा** ति एकिन्द्रियो पाणो द्विन्द्रियो पाणो ति आदिवसेन वदति। **सब्बे भूता** ति अण्डकोसवत्थिकोसेसु भूते सम्भूते सन्धाय वदति। **सब्बे जीवा** ति सालियवगोधुमादयो सन्धाय वदति। तेसु हि सो विरूहनभावेन जीवसञ्ञी। **अवसा अबला अविरिया** ति तेसं अत्तनो वसो वा बलं वा विरियं वा नत्थि। **नियति सङ्गतिभावपरिणता** ति। एत्थ **नियती** ति नियतता, **सङ्गती** ति छन्नं अभिजातीनं तत्थ तत्थ गमनं, **भावो** ति सभावो येव। एवं नियतिया च सङ्गतिया च भावेन च परिणता नानप्पकारतं पत्ता। येन हि यथा भवितब्बं सो तथेव भवति, येन न भवितब्बं सो न भवतीति दस्सेति। **छस्सेवाभिजातिसू** ति छसु एव अभिजातिसु ठत्वा सुखं च दुक्खं च पटिसंवेदेन्ति। अञ्ञा सुखदुक्खभूमि नत्थीति दस्सेति। **योनिपमुखसतसहस्सानी** ति पमुखयोनीनं

च कम्मानि तीणि च कम्मानि कम्मे च अड्ढकम्मे च, द्वट्ठि पटिपदा, द्वट्ठन्तरकप्पा, छळाभिजातियो, अट्ठ पुरिसभूमियो, एकूनपञ्ञास आजीवसते, एकूनपञ्ञास परिब्बाजकसते, एकूनपञ्ञास नागावाससते, वीसे इन्द्रियसते, तिंसे निरयसते, छत्तिंस रजोधातुयो, सत्त सञ्ञिगब्भा, सत्त असञ्ञिगब्भा, सत्त निगण्ठिगब्भा, सत्त देवा,

---

उत्तमयोनीनं चुद्दससतसहस्सानि अञ्ञानि च सट्ठिसतानि, अञ्ञानि च छसतानि, पञ्च च कम्मुनो सतानीति पञ्च कम्मसतानि चाति केवलं तक्कमत्तकेन निरत्थकं दिट्ठिं दीपेति। पञ्च च कम्मानि तीणि च कम्मानीति आदिसु पि एसेव नयो। केचि पनाहु–पञ्च कम्मानीति पञ्चिन्द्रियवसेन भणति, तीणी ति तीणि कायकम्मादिवसेनाति। कम्मे च अड्ढकम्मे चाति, एत्थ पनस्स कायकम्मं च वचीकम्मं च कम्म ति लद्धि, मनोकम्मं उपड्ढकम्मं ति। द्वट्ठि पटिपदा ति द्वासट्ठि पटिपदा ति वदति। द्वट्ठन्तरकप्पा ति एकस्मिं कप्पे चतुसट्ठि अन्तरकप्पा नाम होन्ति। अयं पन अञ्ञे द्वे अजानन्तो एवमाह। छळाभिजातियो ति कण्हाभिजाति नीलाभिजाति लोहिताभिजाति हलिद्दाभिजाति सुक्काभिजाति परमसुक्काभिजाति ति इमा छ अभिजातियो वदति। तत्थ ओरब्भिका सूकरिका साकुन्तिका मागविका लुद्दा मच्छघातका चोरा चोरघातका बन्धनागारिका ये वा पनञ्ञे पि केचि कुरूरकम्मन्ता, अयं कण्हाभिजातीति वदति। भिक्खू नीलाभिजातीति वदति। ते किर चतुसु पच्चयेसु कण्टके ( कन्दके ) पक्खिपित्वा खादन्ति। भिक्खू च कण्टक ( कन्दक ) वुत्तिका ति अयं हिस्स पालि येव। अथवा कण्टकवुत्तिका एव नाम एके पब्बजिता ति वदति। इमे किर पुरिमेहि द्वीहि पण्डरतरा। गिही ओदातवसना अचेलकसावका हलिद्दाभिजातीति वदति। अय अत्तनो पच्चयदायके निगण्ठे हि पि जेट्ठकतरे करोति। आजीविका आजीविनियो अयं

सत्त मानुसा, सत्त पेसाचा, सत्त सरा, सत्त पटुवा, सत्त पटुवासतानि, सत्त पपाता सत्त पपातसतानि, सत्त सुपिना सत्त सुपिनसतानि चुल्लासीति महाकप्पुनो सतसहस्सानि यानि बाले च पण्डिते च सधावित्वा ससरित्वा दुक्खस्सन्त करिस्सन्ति। तत्थ नत्थि-इमिनाह सीलन वा वतेन वा तपेन वा ब्रह्मचरियेन वा

---

सुक्काभिजातातित वदति। ते किर पुरिमेहि चतूहि पण्डरतरा। नन्दो वच्छो, किसो संकिच्चो मक्खलिगोसालो परमसुक्काभिजातीति वदति। ते किर सब्बेहि पि पण्डरतरा। अट्ठ पुरिसभूमियो ति, मन्दभूमि खिड्डाभूमि विमंसनभूमि उजुगतभूमि सेखभूमि समणभूमि जिनभूमि पन्नभूमीति इमा अट्ठ पुरिसभूमियो ति वदति। तत्थ जातदिनसतो पट्ठाय सत्तदिवसे सम्बाधट्ठानतो निक्खन्तत्ता सत्ता मन्दा होन्ति मोमूहा। अय मन्दभूमीति वदति। ये पन दुग्गतितो आगता होन्ति, ते अभिण्ह रोदन्ति चेव विरवन्ति च, सुगतितो आगता तं अनुस्सरित्वा अनुस्सरित्वा हसन्ति। अय खिड्डाभूमि नाम। मातापितुन्न हत्थ वा पाद वा मञ्च वा पीठ वा गहेत्वा भूमियं पदनिक्खमन पन वीमंसाभूमि नाम। पदसा गन्तु समत्थकाले उजुगतभूमि नाम। सिप्पानि सिक्खनकाले सेख भूमि नाम। घरा निक्खम्म पब्बजनकाले समणभूमि नाम। आचरिय सेवित्वा विजाननकाले जिनभूमि नाम। भिक्खु च पन्नको जिनो न किंचि आहानि एव अलाभिं समण पन्नभूमीति वदति। एकूनपञ्ञास आजीवसते ति एकूनपञ्ञास आजीववुत्तिसतानि। परिब्बाजकसते ति परिब्बाजकपब्बज्जासतानि। नागावाससते ति नागमण्डलसतानि। वीसे इन्द्रियसते ति वीस इन्द्रियसतानि। तिंसे निरयसते ति तिंस निरयसतानि। रजोधातुयो ति रजआकिण्णट्ठानानि हत्थपिट्ठपादपीठानि सधाय वदति। सत्त सञ्ञिगब्भा ति ओट्ठगोणगद्रभअजपसुमिगमहिसे सधाय वदति। असञ्ञिगब्भा ति

अपरिपक्कं वा कम्मं परिपाचेस्सामि, परिपक्कं वा कम्मं फुस्स फुस्स ब्यन्तिकरिस्सामि इति । हेवं नत्थि दोणमिते सुखदुक्खे परियन्तकटे संसारे, नत्थि हायनवड्ढने नत्थि उक्कंसावकंसे । सेय्यथापि नाम सुत्तगुळे खित्ते निब्बेठियमानमेव फलेति, एवमेव बाले च पण्डिते

---

सालिवरगोधूममुग्गकङ्गुवरककुद्रूसके सधाय वदति । निगण्ठिगब्भा ति गण्ठिम्हि जातगब्भा, उच्छुवेळुनाळादयो सधाय वदति । सत्त देवा ति बहू देवा, सो पन सत्ता ति वदति । मानुसा पि अनन्ता, सो सत्ता ति वदति । सत्त पिसाचा ति पिसाचा महन्तामहन्ता सत्ता ति वदति । सरा ति महासरा । कण्णमुण्डरथकारअनोतत्तसीहप्पपातनियगाळमुचलिन्दकुणालदहे गहेत्वा वदति । पवुटा (?) ति गण्ठिका । पपाता ति महापपाता । पपात सतानीति खुद्दकपातसतानि । सुपिना ति महासुपिना व । सुपिन सतानीति खुद्दकसुपिनसतानि । महाकप्पुनो ति महाकप्पान । तत्थ एकम्हा महासरा वस्ससते कुसग्गेन एक उदकबिन्दु नीहरित्वा सत्तक्खत्तुं तम्हि सरे निरुदके कते एको महाकप्पो ति वदति । एवरूपान महाकप्पान चतुरासीतिसतसहस्सानि खेपेत्वा बाले च पण्डिते च दुक्खस्सन्त करोन्तीति अयमस्स लद्धि । पण्डितो पि किर अन्तरा सुज्झितु न सक्कोति, बालो पि ततो उद्ध न गच्छति । सीलेन वा ति अचेलकसीलेन वा अञ्ञेन वा येन केन चि । वतेना ति तादिसेनेव । तपेना ति तपोकम्मेन । अपरिपक्क परिपाचेति नाम, यो ' अहं पण्डितो ' ति अन्तरा विसुज्झति । परिपक्कं फुस्स फुस्स ब्यन्तिकरोति नाम यो अहं बालो ? ति सुत्तपरिमाण काल अतिक्कमित्वा याति । हेवं नत्थीति एव नत्थि, तं हि उभयं पि न सक्का कातु ति दीपेति । दोणमिते ति दोणेन मिते, दोणेन मित विय । सुखदुक्खे ति सुख दुक्ख । परियन्तकटे ति सुत्तपरिमाणेन कालेन कतपरियन्ते । नत्थि

च सन्धावित्वा संसरित्वा दुक्खस्सन्तं करिस्सन्तीति"। इत्थं खो मे भन्ते मक्खलिगोसालो सन्दिट्ठिकं सामञ्ञफलं पुट्ठो समानो संसारसुद्धिं ब्याकासि॥

---

हायनवड्ढने ति नत्थि हायनवड्ढनानि। न संसारो पण्डितस्स हायति, न बालस्स वड्ढतीति अत्थो। उक्कंसावकंसे ति उक्कंसावकंसानि, हायनवड्ढनानमेवेतं वेवचनं इदानि तं अत्थं उपमाय साधेन्तो सेय्यथापि नामा ति आदिमाह। तत्थ सुत्तगुळे ति वेठेत्वा कतसुत्तगुळं। निब्बेठियमानमेव पलेतीति पब्बते वा रुक्खग्गे वा ठत्वा खित्तं सुत्तप्पमाणेन निब्बेठियमानमेव गच्छति, सुत्ते खीणे तत्थेव तिट्ठति न गच्छति। एवमेवं वुत्तकालतो उद्धं न गच्छतीति दस्सेति॥

# ARDHAMĀGADHĪ AND PRAKRIT WORKS

Edited By

Prof. N V VAIDYA, M A

Fergusson College POONA 4 (India)

| | | |
|---|---|---|
| *(1) ANTAGADADASĀO & ANUTTAROVAVĀIYADASĀO | | *Out of print* |
| (2) BAMBHADATTA & AGADADATTA | | *Out of print* |
| (3) RĀYAPASENAIJJASUTTAM The *Second* Upāṅga of the Jain Canon | | *Out of print* |
| (4) NĀYĀDHAMMAKAHĀO The Sixth Anga of the Jain Canon *Complete Text only* Critically Edited for the first time | 7-8 0 | |
| (5) NĀYĀDHAMMAKAHĀO Chapters IV-VIII & IX & XVI-Two Volumes | 7-0-0 | |
| (6) PAUMACARIYA of Vimalasūri Chapters I-IV | 4 0-0 | |
| (7) SAMARĀICCAKAHĀ Of Haribhadrasūri: Chapter VI | | *Out of print* |
| (8) DASAVEYĀLIYASUTTAM The Second Mūlasūtra of the Jain Canon Chapters I-VI | 2 0-0 | |
| (9) USĀNIRUDDHAM: BY RĀMA PĀNIVĀDA CANTOS I & II | 2-4-0 | |
| (10) NALAKAHĀ & VARUNAKAHĀ From KUMĀRAPĀLAPRATIBODHA | | |
| (11) UTTARĀDHYAYANASŪTRAM The First *Mūlasūtra* Of The Jain Canon Complete Text Only Edited By R D Vadekar & N V Vaidya Fergusson College Poona-4 | 2 0 0 | |

Text Edited with English Translation, Notes and Introduction

## JAINISM IN GUJARAT

( 1100 A. D To 1600 A D )

By C B SHETH, M A

Some Opinions

*With great interest, I read your book ' Jainism in* Gujarat It is a very helpful work, being a mine of information which you have put together with great industry Please accept my greetings

Dr A N Upadhye
Vice-Principal Rajaram College
Kolhapur

---

Jainism in Gujarat is an original work on the history of Gujarat It was written at the invitation of the University of Bombay It fills up a gap in the Literature on the history of Gujarat that has not taken adequate account of the unique contributions made by Jainism to the history and culture of Gujarat. This work dealing with a rich and glorious heritage preserved by Jainism in Gujarat will be very useful to students of Indian History

( Agian )

---

I have read with great interest the comprehensive and well-documented narrative of the Jain contribution to the history and culture of Gujarat and Saurashtra written by Mr Chimanlal B Sheth in English The writer has consulted all available literature which is extant in Sanskrit *Prakrit* and *Gujarati* on the subject and he *has* tried his utmost to connect it with the relevant Persian literature on that period The treatment is lucid and balanced

K H. Kamdar
Professor of History and Politics
Vallabh Vidyanagar

मूल्य